# VADARTHA-SAMGRAHA

(FOURTH PART)

## ĀKHYĀTA-SHAKTI-VĀDA

BY

RAGHUNĀTH SHIROMANI BHATTĀCHĀRYA

WITH SIX COMMENTARIES

(1) *Ākhyāta-vāda-rahasya*-BY MATHURĀNĀTH.

(2) *Ākhyāta-vāda-tippani*-BY RĀMCHANDRA.

(3) *Ākhyāta-vāda-tippani*-BY RAGHUDEV.

(4) *Vyākhyā*-BY JAYARĀM.

(5) *Vyākhyā*-BY NYAYA-VĀCHASPATI.

(6) *Vyākhyā*-BY RĀMKRISHNA

EDITED BY

MAHĀDEVA GANGĀDHAR BĀKRE

Printed and Published by Natvarlal Itcharam Desai at
THE "GUJARATI" PRINTING PRESS,
Sassoon Bldg Elphinstone Circle,
Fort, BOMBAY, No. 1.

श्रीरघुनाथशिरोमणिभट्टाचार्यकृते

# वादार्थसंग्रहे

## आख्यातशक्तिवादः

( चतुर्थो भागः )

मथुरानाथतर्कवागीशविरचिता आख्यातवादरहस्य-२ राम-
चन्द्रन्यायवागीशभट्टाचार्यविरचिताख्यातवादटिप्पणी-
३ रघुदेवभट्टाचार्यकृताख्यातवादटिप्पणी-४ जय-
रामभट्टाचार्यकृत व्याख्या-५ न्यायवाचस्प-
तिकृत व्याख्या- ६ रामकृष्णनिर्मिता
व्याख्या- इति षट्टीका समन्वितः

मुम्बय्यां
फोर्टसर्कलाख्ये प्रविभागे शासनभवने
' नटवरलाल इच्छाराम देसाई ' इत्यनेन स्वीये ' गुजराती '
मुद्रणयन्त्रालये मुद्रयित्वा तत्रैव प्रकाशितः ।

# वादार्थसंग्रहः

( चतुर्थो भाग )

## शिरोमणिकृताख्यातशक्तिवादः ।

व्याख्याद्वययुतः १३

---

मथुरानाथी

आख्यातस्य यत्नो वाच्यः पचति पाकं करोतीति यत्नार्थककरोतिना सर्वाख्यातविवरणात् । व्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः किङ्करोतीत्यादियत्नप्रश्ने पचतीत्याद्युत्तरस्य यत्नार्थकत्वं विनानुपपत्तेश्च । अचेतने रथो गच्छतीत्यादौ च अनुकूलव्यापारे लक्षणेति प्राञ्चः ॥ १ ॥

अथ शिरोमणिकृताख्यातशक्तिवादविवृतिः ।

कुञ्चिताधरपुटेन वादयन् वंशिकां प्रचलदङ्गुलिपङ्क्ति ।
मोदयन्नखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥

श्रीमता मथुरानाथ-तर्कवागीशधीमता ।
आख्यातशक्तिवादस्य क्रियते विवृतिः शुभा ॥

आख्यातस्य शक्तिं निरूपयति—'आख्यातस्येति । आख्यातं यत्नत्वावच्छिन्नशक्यताकमित्यर्थः, तेन वक्ष्यमाणहेतोर्न वैयधिकरण्यम् । आख्यातत्वञ्च सङ्केतविशेषसम्बन्धेन आख्यातपदवत्त्वं, न तु जातिः, तिवादिना साङ्कर्यात् मानाभावाच्च । शक्ततावच्छेदकञ्च न तत्, किन्तु प्रत्येकं तिवादिकमेव, आख्यातत्वप्रकारेणाज्ञानदशायां तिवादिना ज्ञानात् शाब्दबोधमात्रस्य शक्तिभ्रमजन्यत्वप्रसङ्गात्, तिवादिना प्रकारेणाज्ञानदशायां तत्प्रकारेण ज्ञानात् शाब्दबोधानुदयस्य सर्वसिद्धत्वात् । यत्नत्वञ्च प्रवृत्तित्वं, प्रवृत्तित्वं च रागजन्यतावच्छेदकतया सिद्धं, अहं यते अहं प्रवृत्तोऽस्मि अहं करोमीत्यनुव्यवसायसाक्षिको निवृत्ति-जीवनयोनियत्नावृत्तिर्जातिविशेषः, निवृत्तिजीवनयोनियत्नयोः रागजन्यत्वाभावात् तथा-

---

१ यत्नवाचकत्वम् इ पा० २ 'शक्तिग्रहात्' इ पाठ ३ हीति प्रश्ने इ पाठ. ४ द्युत्तर पाठ ।

ऽन्यवसायविरहात् । चेष्टाजनकतावच्छेदक स एव निवृत्तेश्चेष्टाजनकत्वविरहात्। सुषुप्तौ शरीरकर्मणि चेष्टात्वे मानाभावात्, तत्रापि चेष्टात्वस्यानुभवसिद्धत्वे रागजन्यतावच्छेदकप्रवृत्तित्वव्यापको निवृत्तिव्यावृत्तो जीवनयोनियत्नसाधारणो जातिविशेष एव चेष्टाजनकतावच्छेदक , स च नाख्यातस्य शक्यतावच्छेदक तथासत्याख्यातस्य कृधातुपर्यायत्वानुपपत्तेः । सुषुप्तौ जीवनयोनियत्नसत्त्वेऽपि स्वारसिककरोतिव्यवहाराभावेन रागजन्यतावच्छेदकप्रवृत्तित्वस्यैव कृधातु शक्यतावच्छेदकत्वात् । एतेन ' प्रवृत्ति–निवृत्ति–जीवनयोनिसाधारणं गुणविभाजक प्रयत्नत्वमेव आख्यातस्य शक्यतावच्छेदकम् । न चैवं पाकगोचरनिवृत्तिदशायामपि पचतीत्यादि प्रयोग स्यादिति वाच्यं । निवृत्तेः क्रियानुकूलत्वाभावात् क्रियानिष्ठसाध्यत्वाख्यविलक्षणविषयतानिरूपकत्वाच्च । तथाच व्यवहारासंभवात् आख्यातार्थप्रयत्न–धात्वर्थयोस्तादृशसम्बन्धेनैवान्वयस्य साकाङ्क्षत्वात् योग्यताभ्रमात् तथा प्रयोगस्येष्टत्वात् । प्रवृत्तित्वस्य शक्यतावच्छेदकत्वेऽपि लक्षणया योग्यताभ्रमात् तदानीं तादृशप्रयोगस्य दुर्वारत्वात् ' इति कस्यचित् प्रलपितमप्यपास्तम् । तथा सति आख्यातस्य कृधातुपर्यायत्वानुपपत्ते गुणविभाजकप्रयत्नत्वस्य जातित्वे मानाभावेन प्रवृत्तित्वमपेक्ष्य तस्य गुरुत्वाच्च । न च प्रवृत्तित्वस्य शक्यतावच्छेदकत्वे चैत्रो निःश्वसितीत्यादौ कथं श्वासानुकूलप्रयत्नानुभव इति वाच्यम् । तत्र श्वासाश्रयत्वमात्रप्रतीते शरीरक्रियाविशेषस्य श्वासत्वात्। न च तथापि प्रवृत्तित्वस्य शक्यतावच्छेदकत्वे परमेश्वरो वेद वक्ति परमेश्वरो वेदमुच्चारयति परमेश्वरो वेदं प्रयुङ्क्ते इत्यादौ कथं वेदाभिन्नशब्दानुकूलयत्नवत्त्वानुभव वेदजनककण्ठाद्यभिघातानुकूलयत्नवत्त्वानुभवो वा इति वाच्यम् । कार्यसामान्यप्रत्यनिष्ठतया व्याप्यधर्मतया च प्रवृत्तित्वस्यैव जनकतावच्छेदकत्वेऽपि भागवतप्रयत्नेऽपि प्रवृत्तित्वस्य धर्मिग्राहकप्रमाणसिद्धत्वात् । यद्वा तत्र वचादिधातोरेव यत्नसामान्यमर्थं , अनुकूलत्व विषयत्व वा कर्मनिष्ठत्वार्थं , आख्यातस्याश्रयत्वमर्थं , आख्यातस्यैव वा यत्नसामान्ये लक्षणा वचादिधातुश्च कण्ठाद्यभिघातपर एव ।

केचित्तु परमेश्वरपद तदीयकण्ठपर, वचादिधातो कण्ठाद्यभिघात एवार्थ , आख्यातस्य आश्रयत्वमेवार्थं , आख्यातस्यैव वा परम्परासम्बन्धविशेषेणाश्रयत्वमर्थं , तथाच परमेश्वरपद यथाश्रुतमेवेत्याहुः ।

तथासति प्रतिपादकतावच्छेदकसम्बन्धेन कृधातुमत्त्वादिति हेतुश्च । विशेषेत्युपादानात् आत्मादौ न व्यभिचार । नन्वयं हेतुरसिद्ध इत्यत आह–पचतीति । पचति पाकं करोतीत्यादिवाक्यमध्यवर्तिना यत्नार्थकरोतिना यत्नगत-कृधातुना सर्वाख्यातानां [illegible]

[illegible]

[illegible] विवरण पाक

करोतीत्यत्र करोतिना पचतीत्यादेर्विवरणादसङ्गतत्वापत्ते । सर्वाख्यातविवरणादित्यस्य सर्वैराख्यातविवरणादित्यर्थ, इति केचित् । अयं भाव, पचति पाकं करोतीत्यादिविवरणेषु पचतिपदं स्वपरतया पचपदपरं तिपदपरञ्च, पाकपदसमभिव्याहारेण कृधातुः पाकसमानार्थकत्व–कृञ्समानार्थकत्वपर, आख्यातत्वमाख्यातार्थ, एवञ्च पचपदं पाकसमानार्थकं, तिपदं कृञ्समानार्थकमित्यादिबोध । एवं सर्वत्रैव विवरणे यत्पदे यत्र तत्पदसमभिव्याहारेण तत्तत्समानार्थकत्वे लक्षणा । अतएव येन समानार्थकतया यत् बोध्यते तत् तस्य विवरणमिति प्रामाणिका । ननु तथापि शक्यप्रतिपादकताविशेषसम्बन्धेन कृधातुमत्त्व लक्षणादिना कृधातुशक्यप्रतिपादके शब्दे अनैकान्तिकमित्यत आह, व्यवहारादिवेति । बाधकं विना स्वसाध्यवाधकं यद्विशेषणं तदभाववत्त्वविशेषणमहत्त्वेन, व्युत्पत्तेः व्युत्पत्तिसंभवात् शक्तिग्रहसंभवादिति यावत् । गवादिपदव्यवहारो यथा गवादिपदशक्यत्वस्वरूप–स्वसाध्यस्य बाधकं यद्विशेषणं लक्षणा–शक्तिभ्रमजन्यप्रतिपत्तिविषयतासम्बन्धेन गवादिव्यवहारवत्त्वं तदभाववत्त्वे सतीति विशेषणविशिष्टीभूय प्रतिपादकतासम्बन्धेन गवादौ गवादिपदशक्तिसाधक, तथा कृधातुमत्त्वादिरूपविवरणमपि प्रवृत्तिलाघवबलादिरूपस्वसाध्यस्य बाधकं यद्विशेषण लक्षणा–शक्तिभ्रमजन्यस्वशक्यप्रतिपत्तिजनकतासम्बन्धेन कृधातुमत्त्वं तदभाववत्त्वे सतीति विशेषणविशिष्टीभूयस्वशक्यप्रतिपादकताविशेषसम्बन्धेन प्रकृतानाख्यातादे शक्तिसाधकमित्यर्थ, तथाच निरुक्तबाधकाभाववत्त्वं हेतौ विशेषणं देयमिति भाव । अतएव “शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यत सिद्धपदस्य वृद्धा ” ॥ इति पठन्ति । तत्रानुमानपदं व्यवहारादीतरानुमानपर, तेन व्यवहारादेर्न पृथगुपादानविरोध ।

सांप्रदायिकास्तु तन्त्वाख्यातस्य किं शक्यमित्यत आह, आख्यातस्येति । यत्र आख्यातस्य वाच्य इति यथाश्रुत एवार्थ । ननु तस्याख्यातपदवाच्यत्वे किं मानमित्यत आह, ‘ पचतीति, अभेदे तृतीया, अन्वयश्चास्य विवरणे, विवरण स्वसमानार्थकत्वज्ञापकं, ज्ञापकं ज्ञानानुकूल शब्द, प्रमाणस्तत्त्व एवमर्थ, तथाच विवरणमेव मानमिति भाव । ननु विवरणस्य शक्तिप्रमापकत्वं न शब्दविधया शब्दे पदार्थद्वय–वाक्यार्थत्वयोरभावादत आह–व्यवहारादिवेति । तथाचानुमानविधयैव तस्य शक्तिमापकत्वमिति भाव । अनुमानप्रयोगस्तु पूर्ववत् ।

ननु विवरणेन कृधातुशक्यप्रतिपादकत्वं निर्वाहेन बोधितं, अपि तु कृधातुप्रतिपाद्यप्रतिपादकत्वं तत्र लक्षणया कृधातो प्रतिपाद्यस्य व्यापारस्य प्रतिपादकत्वेऽपि निर्वहतीत्यरुचेराह–किं करोतीति । किंविषयकव्यापारवत्प्रश्ने तद्विशिष्टविषयकबोधे सत्यर्थं । किंविषयकं जिज्ञासितविषयकं, किंशब्दस्य जिज्ञासितार्थकत्वात् । ‘ समानार्थकत्वं विना ’ आख्यातस्य प्रवृत्तित्व-

विशिष्टार्थकत्वं विना, अनुपपत्तेरिति जिज्ञासानिवर्तकत्वानुपपत्तेरित्यर्थः । यद्धर्मविशिष्टे जिज्ञासितस्य तत्सम्बन्धः प्रश्नवाक्येन बोध्यते धर्मविशिष्टे विशिष्य तत्सम्बन्धज्ञानेनैव जिज्ञासानिवृत्तेरिति भावः । तथाच आख्यातं प्रकृतित्वावच्छिन्न शक्यताकं प्रकृतित्वविशिष्ट जिज्ञासाया निवर्तकस्य ज्ञानस्य जनकत्वात् इत्यनुमानप्रकारोऽवसेयः । तत्रापि लक्षणा–शक्तिभ्रमाजन्यत्वेन ज्ञानं विशेषणीयं, तेन लक्षणया प्रकृतिबोधके शब्दे न व्यभिचारः । न च लक्षणाशक्तिभ्रमाजन्यप्रकृतित्वविशिष्टविषयकज्ञानजनकत्वादित्येवास्त्विति वाच्यं, हेत्वन्तरसम्भवस्य हेत्वन्तरादूषकत्वादिति दिक् । ननु पूर्वहेतौ निरुक्तबाधकाभावसत्त्वविशेषणम् अत्र तु लक्षणाशक्तिभ्रमाजन्यत्वं ज्ञानविशेषणमप्रसिद्धं, प्रकृतित्वस्याख्यातशक्यतावच्छेदकत्वे रथो गच्छतीत्यादिवाक्यस्यायोग्यत्वापत्त्या अनुकूलव्यापारादावाख्यातस्य शक्ते रथादेरचेतनतया चैतन्यावच्छेदकतया च तत्र प्रकृतिमत्त्वासम्भवात् । अपचत्यपि चैत्रादौ कालिकादियत्किञ्चित्सम्बन्धेन प्रकृतिमत्त्वमादाय चैत्रः पचतीत्यादिव्यवहारवारणाय समवायावच्छेदकतान्यतरसम्बन्धेनैव कर्तृपदार्थे आख्यातार्थप्रकृतेरन्वयस्य साकाङ्क्षत्वमित्यभ्युपेयत्वात्, आत्मा पचतीत्यादिप्रयोगानभ्युपगमे समवायोऽपि नान्तर्भावनीयः, परमेश्वरो वेदं वक्तीत्यादौ परमेश्वरपदस्य तच्छरीरपरत्वमेव योग्यत्वं न तु परमात्मपरत्वम् इति चाकामेन स्वीकरणीयमित्याशङ्क्य प्राचीनमतमाश्रित्य परिहरति–अचेतनइत्यादिना । 'अचेतने' अचेतनविशेष्यकाख्यातार्थप्रकारकबुद्धिजनके, 'अचेतनत्वं' समवायावच्छेदकत्वान्यतरसम्बन्धेन चैतन्यवतो भिन्नत्वं तेन चैत्रः पचतीत्यादेर्न सङ्ग्रहः, तण्डुलः पच्यते इत्यादेर्व्यवच्छेदार्थमुक्तं 'रथो गच्छतीत्यादाविति, तेन कर्तृप्रत्ययात इति लभ्यते, 'च' त्वर्थः । अनुकूलव्यापारे लक्षणेति अनुकूलव्यापारे निरूढलक्षणेत्यर्थः । यादृशलक्षणया प्रयोगे कथायां वादिनो न निग्रहः सैव लक्षणा निरूढा । अनुकूलत्वस्य धात्वर्थाख्यातार्थव्यापारयोः समानतया स्फोरणायानुकूलत्वेनोपादानं, न तु लक्ष्यतावच्छेदके तदन्तर्भावः । व्यापारत्वञ्च कार्यत्वं तच्च प्रतियोगितासम्बन्धेन ध्वंसवत्त्वं प्रागभाववत्त्वं वा व्यापारत्वम् ॥ १ ॥

## रामचन्द्रतर्कवागीशकृतव्याख्या ।

आख्यातस्येति । आख्यातत्वं शक्ततावच्छेदकं यत्नत्वञ्च शक्यतावच्छेदकमित्यर्थः, तत्राख्यातत्वं तत्तद्वर्णानुपूर्वीज्ञानविशेषः, त्यादयो लकारादेशाः, तथाचाप्राप्तस्य पचतीत्यादावादेशेन त्यादिना आदेशिनो लकारस्य स्मरणादेव यत्नत्वविशिष्टस्योपस्थितिः–शाब्दबोधौ विशेषदर्शिनः । भ्रान्तस्य च त्यादावेव यत्नत्वविशिष्टशक्तिभ्रमादन्वयबोधः । न च त्यादेः कर्तृत्वादिशक्तत्वमादाय विनिगमकाभावः सकलेन पाणिनिमुनिना त्यादीनां लकारादेशत्वबोधनं न तु कर्त्रादीनामित्यस्यैव विनिगमकत्वादिति सम्प्रदायविदः । आख्यातपदात् त्यादयो बोध्याः [illegible] व्याकरणपरिभाषाविषयत्वसम्बन्धेनाख्यातपदवत्त्वमेषा-

स्थाली पचतीत्यादौ पाकानुकूलव्यापारस्य विवरणेऽपि न व्यापारत्वविशिष्टे शक्तिः यत्नत्वापेक्षया व्यापारत्वस्य गुरुत्वमेव बाधकमेव पचति पाकं यत्नवान् इत्यादिना धर्मिणो विवरणेऽपि तत्रान्यलभ्यत्वमेव बाधकमिति भावः । तदाह "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" ॥ 'विवृति' विवरणमित्यर्थ इति, तथाच शक्तिग्राहकाणां मध्ये विवरणस्यापि शक्तिग्राहकत्वमुक्तमिति न सिद्धान्तविरोधः । विवरणस्य शक्तिग्राहकता च व्यवहारस्येव अनुमानोत्थापकतया । तथा हि पचतीत्याख्यातपदं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टार्थककृधातुप्रतिपाद्यार्थकशब्दत्वादित्याद्यनुमानम्, अत्र च कृधातुप्रतिपाद्यार्थकत्वरूपं विवरणं हेतुघटकमिति शक्तिग्राहकानुमानहेतुघटकत्वमेव विवरणस्य शक्तिग्राहकत्वपदार्थ इति भावः । न च व्यवहारस्य शक्तिग्राहकत्वाभावेन व्यवहारादिवेति दृष्टान्तविरोध इति वाच्यम् । घटपदं घटत्वविशिष्टे शक्तं, लक्षणाद्यजन्यघटत्वविशिष्टबोधजनकपदत्वादित्यनुमाने घटत्वविशिष्टबोधकत्वरूपव्यवहारस्य हेतुघटकतया शक्तिग्राहकानुमानोत्थापकत्वसम्भवात् । 'व्युत्पन्ने' शक्तिग्रहात्, व्युत्पत्तिपदस्य शक्तिग्राहकत्ववत् शक्तिग्रहवाचकत्वादिति भावः । ननु नैयायिकानां यत्नत्वविशिष्टे आख्यातस्य विवरणवत् मीमांसकानां व्यापारेऽपि विवरणात् व्यापारत्वविशिष्टेऽपि शक्तिः स्यादिति न विवरणस्य शक्तिग्राहकतेत्यत आह—किं करोतीति । कृतित्वविशिष्टधर्मिक–किञ्चिद्धर्मप्रकारकजिज्ञासाविषयः किंशब्दार्थः, 'किमिति क्रियाविशेषणं, तथाच किं करोतीत्यस्य तादृशजिज्ञासाविषयाभिन्नकृतिमानित्यर्थः, क्रियाविशेषणस्याभेदेनान्वयस्य व्युत्पन्नत्वात् । न च किमित्यत्र द्वितीयाया अनुकूलत्वमर्थः, तथा सति विषयत्वेनान्वयानुपपत्तिप्रसङ्गादिति भावः । अस्तु वा विषयत्वमेव द्वितीयार्थः, तादृशजिज्ञासा च किंशब्दार्थ इति । यत्नार्थकत्वं विनेति । पचतीत्यस्य यत्नत्वविशिष्टार्थकत्वविरहे पचतीत्यतो यत्नत्वविशिष्टधर्मिकपाकप्रकारकबोधो न स्यात् तथाच प्रश्नविषयीभूतजिज्ञासानिवर्तकज्ञानजनकवाक्यत्वरूपमुत्तरत्वं पचतीति वाक्ये न स्यादित्यर्थः । नन्वाख्यातस्य यत्नत्वविशिष्टबोधकत्वे रथो गच्छतीत्यादिवाक्यस्यायोग्यत्वापत्तिः अचेतने रथादौ गमनानुकूलकृत्यबाधादित्यत आह—अचेतन इत्यादि । अचेतनविशेष्यकबोधजनक इत्यर्थः । अनुकूलत्वादि । तथाच रथो गच्छतीत्यादौ गमनानुकूलव्यापारात्मकनोदनाभिघातादिरूप रथादावस्तीति नायोग्यतेति भावः । इत्थं प्राचीनमतम् ॥ १ ॥

रघुदेवभट्टाचार्यकृता आख्यातवादटीका ।

प्रणम्य नीरद[illegible]गुणमन्दिरम् ।
[illegible]ख्याता रघुदेवेन तन्यते ॥ १ ॥

नैयायिक[illegible] निराकर्तुं [illegible]—आख्यातस्येत्यादिना ।

यत्नो वाच्यः यत्नत्वविशिष्टो वाच्यः, यत्नत्वं शक्यतावच्छेदकमिति यावत्। यथाश्रुते यत्नस्य व्यापारान्तर्गतत्वेन व्यापारशक्तिवादिमतव्यवच्छेदाप्रतीतेः। शक्ततावच्छेदकं चाख्यातत्वम्। तच्च रूढिसंबन्धेनाख्यातपदवत्त्वम्। यदि च रूढिसंबन्धेनाख्यातपदवत्त्वं लकारेष्वेव अभियुक्तानां तत्रैवाख्यातपदप्रयोगात्, तथा च पचतीत्यादावपि कृतिबोधापत्तिः। तत्रापि लकारस्थाने शत्रादेर्दर्शनेन रूढिसंबन्धेनाख्यातपदवत्त्वो लकारस्य सत्त्वादिति विभाव्यते; तदा विशिष्य तिप्त्वादिकमेव शक्ततावच्छेदकं बोध्यम्। एतेन दशलकारसाधारणं लत्वमेव शक्ततावच्छेदकमिति परास्तम्। तस्यैक्याभावात् भावे वा पचन्नित्यादावपि कृतिबोधप्रसङ्गादिति। तथा च यत्नत्वावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति यत्नत्वावच्छिन्नविशेष्यकरूढिसंबन्धघटिताख्यातपदवत्त्वावच्छिन्ननिरूपितशक्तिविषयकज्ञानजन्ययत्नोपस्थितित्वेन हेतुत्वं कल्पनीयमिति ध्येयम्। ननूपदर्शितकार्यकारणभावकल्पने शुद्धाख्यातपदाद्यत्नविषयकशाब्दबोधापत्तिरिति चेन्न। संभवत्येवं यदि हि पाकाद्यनुकूलविषयकशाब्दत्वावच्छिन्नं प्रति तिबादिपदनिष्ठपचादिधात्वव्यवहितोत्तरत्वरूपानुपूर्वीज्ञानस्य हेतुत्वं न कल्प्यते। वस्तुतस्तु शुद्धाख्यातपदजन्ययत्नोपस्थितिकाले पाको यत्नश्चेति निराकाङ्क्षवाक्यात्पाकानुकूलयत्नाविषयकशाब्दबोधवारणाय तादृशकार्यकारणभावकल्पनाया आवश्यकत्वेनोपदर्शिताख्यातपदनिरूपितशक्तिज्ञानजन्योपस्थित्या यत्नशाब्दबोधे जननीये पचतीत्याद्यानुपूर्वीज्ञानस्य सहकारित्वकल्पनेनैव केवलाख्यातपदाद्यत्नविषयकशाब्दबोधवारणसंभवात्।

केचित्तु आख्यातस्य यत्नवाचकत्वे पाकगोचरनिवृत्त्याख्ययत्नकाले चैत्रः पचतीत्यादिप्रयोगस्य योग्यत्वापत्तिमुद्भावयन्ति तन्न श्रद्दधीमहि। प्रवृत्त्यभावातिरिक्तनिवृत्त्याख्ययत्ने मानाभावात्। वस्तुतस्तु निवृत्त्याख्ययत्नाङ्गीकारेऽपि न क्षतिः। यतः पचतीत्यादिवाक्यात्पाकानुकूलकृतेरेव शाब्दबोधोत्पत्त्या निवृत्त्याख्ययत्नकाले पाकानुकूलकृतेरभावेन तदानीं तादृशप्रयोगस्य तथाविधप्रमात्मकशाब्दबोधाजनकतयायोग्यत्वं सूपपादमेवेति। ये तूपदर्शितापत्तिभिया प्रवृत्तित्वमेवाख्यातशक्यतावच्छेदकमुपवर्णयन्ति। तन्न। तेषां मते इष्टसाधनताज्ञानजन्यतावच्छेदककोटिप्रविष्टत्वेन सिद्धायाः प्रवृत्तित्वाख्यजातेरीश्वरीयकृतिसाधारण्ये मानाभावेनेश्वरो वेदं करोतीति वाक्याच्छाब्दबोधानिर्वाहः परिचिन्तनीयः। न च तत्राख्यातस्य कृतौ लक्षणया नानुपपत्तिरिति वाच्यम्। उपदर्शितरीत्या तादृशशक्त्यैव वाक्यजन्यशाब्दबोधस्य निर्वाहे लक्षणाकल्पनस्यान्याय्यत्वात्। न चाख्यातस्य यत्नत्वविशिष्टवाचकत्वे चैत्रः पचतीत्यादिवदीश्वरः पचतीत्यादिप्रयो-

गापत्तिवारणायाख्यातस्य प्रवृत्तित्वविशिष्टे शक्तत्वमुपगन्तव्यमिति वाच्यम्। आत्मा पचतीत्यादिप्रयोगवत्तस्यापि वारणमभवात्। तथाहि–आख्यातस्य यत्नत्वविशिष्टवाचकत्वे आत्मा पचतीत्यादिप्रयोगापत्तिरित्यत्र तथाविधप्रयोग शब्दार्थ, तथाविधशब्दजन्यप्रमात्मकशाब्दबोधो वा। नाद्य। कण्ठताल्वाद्यभिघातरूपशब्दकारणसत्त्वे तथाविधशब्दे इष्टापत्ते। नान्त्य। तथाविधशाब्दबोधस्यापादकाभावात्। योग्यताज्ञानमेवापादकमिति तु नाशङ्कनीयम्। यतस्तयाविधशाब्दबोधाप्रसिद्धया तादृशबोधं प्रति तादृशयोग्यताज्ञानत्वेन हेतुत्वकल्पनस्य निष्प्रयोजनकत्वात्।

ननु पाकानुकूलकृतिमान्श्चैत्र इत्यादिशाब्दबोध प्रति तत्समानाकारयोग्यताज्ञानस्य धर्मितावच्छेदकभेदेन हेतुत्वकल्पने गौरवात् समानधर्मितावच्छेदकताप्रत्यासत्त्यैव तथाविधयोग्यताज्ञानशाब्दबोधयोर्हेतुहेतुमद्भाव समुचित। तथा च पाकानुकूलकृतिप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दत्वावच्छिन्न प्रति पाकानुकूलकृतिप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन ज्ञानत्वेन हेतुत्वमिति योग्यताज्ञानशाब्दबोधयो हेतुहेतुमद्भावे व्यवस्थिते तादृशसम्बन्धेन पाकानुकूलकृतिप्रकारकज्ञानस्य आत्मत्वे सत्त्वात्तत्र तादृशबोधापत्तौ स्वीक्रियमाणायां फलतस्तादृशपाकानुकूलकृतिमानात्मेति तादृशबोधापत्तिरिति तु मा शङ्किष्ठा। अवच्छेदकतासम्बन्धावच्छिन्नतादृशकृतिप्रकारताकशाब्दबोध प्रति तथाविधयोग्यताज्ञानस्य हेतुताया कल्पनीयतया आत्मा पचतीत्यादौ विशेषदर्शिनां तादृशयोग्यताज्ञानविरहेण तथाविधप्रमात्मकशाब्दबोधापत्तेरशक्यत्वात्। एव चेश्वर पचतीत्यादिवाक्यजन्यतादृशशाब्दबोधापत्तिवारणस्यापि सुलभत्वात्। नचैवं सति ईश्वरो वेदं वक्तीति प्रयोगाद्बोधानुपपत्ति, ईश्वरेऽवच्छेदकता सम्बन्धेन कृतरभावादिति वाच्यम्। तत्र समवायसंबन्धेन कृतिप्रकारकशाब्दबोध प्रति तथाविधानुपूर्वीज्ञानस्य हेतुत्वकल्पनादीश्वर पचतीत्यादितस्तथाविधशाब्दबोधस्यानुत्पादेन तथाविधकल्पनाया असम्भवात्। अतएव आत्मा पचतीश्वर पचतीत्यादिवाक्यजन्यशाब्दबोधेऽपि इष्टापत्तिमङ्गीकुर्वन्तीत्यलमधिकेन।

ननु यत्नत्वविशिष्टे आख्यातपदस्य शक्तौ किं प्रमाणमत आह–पचतीत्यादि। किं करोतीत्यनन्तरं पचतीति शेष। सवाख्यातविवरणादिति। इत्याकारकाख्यातार्थविवरणादित्यर्थ। पूर्वोपस्थितवाक्यस्यापरवाक्येनार्थकथनं विवरणमित्युच्यते तच्चानुपपन्नमिति भाव।

ननु कथं विवरणस्य शक्तिग्राहकत्वं शब्दार्थयोरनुपपत्तिविषयत्वा वा। नाद्य:

पाकं करोतीत्यादिवाक्यस्य पाकविषयकयत्नमात्रबोधकत्वेन यत्ने आख्यातस्य शक्त्यबोधकतया तस्य शक्तिग्रहे शब्दविधया प्रमाणत्वासम्भवात् । नान्यः । साध्यहेतुप्रयोगासम्भवादिति चेन्न । आख्यातपदं यत्नत्वविशिष्टे शक्तम्, बाधकं विना यत्नत्वविशिष्टार्थककरोतिप्रतिपादितार्थकत्वात्, पाकत्वविशिष्टशक्त पाकपदप्रतिपादितार्थकपचधातुवत् । यद्यद्विशिष्टार्थबोधकपदप्रतिपादितार्थकं तत्तद्विशिष्टे शक्तमिति सामान्यव्याप्त्या विवरणस्यापि शक्तिग्राहकत्वसम्भवात् । ननूपदर्शितानुमानमप्रयोजकमत आह—व्यवहारादिवेति । बाधकं विना अन्यलभ्यत्वप्रतिसन्धानं विना । इदं तु धर्मिण्याख्यातस्य शक्तिव्यवच्छेदार्थमुक्तम् । व्युत्पत्तेरिति । शक्तिग्रहसम्भवादित्यर्थः । तथा च विवरणहेतुकानुमानस्य शक्तिग्राहकत्वे तुल्ययुक्त्या व्यवहारहेतुकानुमानस्यापि शक्तिग्राहकतया घटत्वादिविशिष्टे घटपदादेरपि शक्तिविलोपप्रसङ्गादिति भावः ।

ननु विवरणं तत्रैव शक्तिग्राहकं यत्र नान्यलभ्यत्वप्रतिसन्धानम्। प्रकृते तु पाको यत्नजन्यः पाकत्वादित्यनुमानादपि यत्नस्य लाभसम्भवेनान्यलभ्यत्वात् अन्यलभ्यस्यापि आख्यातपदशक्यत्वे किमपराद्धं धर्मिणेत्यत आह—**किं करोति** इत्यादि । यत्प्रश्ने यत्नत्वविशिष्टेजिज्ञासितसम्बन्धबोधकशब्दप्रयोगे, पचतीत्युत्तरस्योत्तरकालभाविपचतीत्यादिवाक्ये उपदर्शितप्रश्ननिवर्तकत्वस्य, यत्नार्थकत्वं विना यत्नत्वविशिष्टे पाकसम्बन्धबोधं विना । अयं भावः—यद्धर्मविशिष्टे यद्धर्मव्याप्यधर्मावच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यात्प्रतीयते तद्धर्मविशिष्टे तद्धर्मव्याप्यधर्मावच्छिन्नसम्बन्धश्चेत्तदुत्तरवाक्यात्प्रतीयते, तदा तदुत्तरवाक्यस्य तत्प्रश्ननिवर्तकत्वं सम्भवति । यथा घटत्वविशिष्टे जिज्ञासितसम्बन्धबोधके 'कस्माद्घट' इति प्रश्ने घटत्वविशिष्टे दण्डजन्यत्वबोधकं 'दण्डात् घट.' इत्युत्तरवाक्ये तन्निवर्तकत्वम् । प्रकृते च आख्यातस्य यत्नत्वविशिष्टवाचकत्वे व्यापारशक्त्या पचतीतिवाक्यात्पाकानुकूलव्यापारबोधाभ्युपगमे यत्नत्वविशिष्टे पाकसम्बन्धबोधाभावात्तद्वाक्यस्य यत्नत्वविशिष्टे जिज्ञासितसम्बन्धबोधक 'किं करोति' इति प्रश्नवाक्यनिवर्तकत्वानुपपत्त्या अन्यलभ्यत्वेऽप्याख्यातस्य यत्नत्वविशिष्टे शक्तिरावश्यकीति ।

ननु रथो गच्छतीत्यादावाख्यातस्य यत्नबोधकत्वासम्भवेन व्यापारे शक्तिरावश्यकीत्यत आह—**अचेतन** इति । अचेतनार्थमुख्यविशेष्यकबोधजनक इत्यर्थः । अनुकूलव्यापार इति । अत्रानुकूलत्वोत्कीर्तनं तु गमनस्य तेन सम्बन्धेन व्यापारेऽन्वयस्फोरणाय, न तु तदन्तर्भावेनापि लक्षणीयता व्यर्थत्वात् । तत्र गमनस्यान्वये पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिविरोधाच ॥ १ ॥

जयरामभट्टाचार्यकृतव्याख्या ।

न्यायपञ्चानन श्रीमाञ्जयराम समासत ।
आख्यातवादव्याख्यानमातनोति मनोरमम् ॥

अनुकूलव्यापारत्वमाख्यातशक्यतावच्छेदकमिति केचित् । अनुकूलत्वस्य सस र्गत्वाद्व्यापारत्वमात्र तथेत्येके । अनुकूलत्वमात्र तथेत्यन्ये । धातोरर्थे फलमनु कूलव्यापारादिकमाख्यातस्येति मण्डन । तत्तत्फलावच्छिन्नव्यापारविशेषस्तत्त द्वात्वर्थ । संख्यावर्तमानत्वादिक क्वचिदाश्रयत्व चाख्यातार्थ इति गुरवस्तात्सर्व निराचिकीर्षु प्रतिजानीते—आख्यातस्येति । आख्यातत्व सकेतविशेषसम्बन्धेन आख्यातपदवत्त्वम् । एतेन विभक्तित्वादयो व्याख्याता । तिबाद्यन्यतमत्व वा तत् । इद च साध्यकोटिनिविष्ट न तु शक्तताच्छेदक विभाऽपि तेन रूपेण ज्ञान, तिप्त्वादिना ज्ञानादेव तिबादितोऽर्थप्रत्ययेन तिप्त्वादेरेव तत्त्वात् ।

परे तु तिप्त्वाद्यवच्छिन्नस्य सकेतभ्रमादेव बोध । शक्ततावच्छेदकानन्त्ये शक्त्यानन्त्यापत्त्या सर्वत्र तत्तत्पदान्यतमत्वस्यैव शक्ततावच्छेदकत्वादित्याहु ।

यत्तु लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ्, । इतिदशलकारसाधारणलत्वावच्छिन्नस्य यत्ने, आदेशभूततिबादिवृत्तिना तित्वा दिना एकवचनत्वादिना वाऽवच्छिन्नस्यैकत्वादौ लट्त्वाद्यवच्छिन्नस्य वर्त- मानत्वादौ शक्ति । इत्थ च पचतीत्यादौ तिबाद्यादेशस्मारितलडादेरेव यत्ना दिप्रत्यय । लडादेशयोरपि शतृशानचो कर्तरि शक्तिरादेश्यर्थकृतेस्त्वाभेदान्व याऽसम्भवादिति तन्न । ईदृशादेशादेशिभावसम्बन्धाधीनादेशिस्मृतेर्भूयाद्युत्तरलत्वा दिना यत्नानुभावकत्वस्य च कल्पने गौरवात् । वेदादिप्रयुक्ततिबाद्यन्यतमत्वेन शक्तत्वौचित्याच्च । किं च तिबादीनामकैकत्र शक्तिरन्यत्र लक्षणया शक्तिभ्र माद्वा बोध इत्यस्तु, लयापि तिबादौ शक्तिभ्रमस्वीकारात् । तिबादयो लस्या देशा यस्य वेत्यत्र मुनिवचनातिरिक्त प्रमाणमादर्शनीयम् । वचसा वचस इत्या- दावनुभावकत्वेन क्लृप्तस्यादेशिनो देवेन देवस्येत्यादावादेशेन स्मरण युक्त तस्मात्प्रकृते सख्यावर्तमानत्वाद्यनुभावकतावच्छेदकतिप्त्वादिनैव यत्नानुभावक त्वम् । अनुभावकताया शक्ततायाश्चैकमवच्छेदकम् । एतेन लादय आदे शिनो निरर्थका एवेति वैयाकरणमतमप्यपास्तम् । आदेशित्वे मानाभावात् । लस्य वादेर्वा तत्वमित्यत्र विनिगमकाभावाच्च ।

यत्तु एकवर्णपदत्वमेव शक्ततावच्छेदकम् । अस्तु वा पदमात्रस्य चरमवर्ण- त्वमेव तथा, अन्यत्तु तात्पर्यग्राहक, समुदाये शक्तत्वव्यवहारस्तु समासादाविव

गौण इति तन्न । तथा सति कल्शादिपदस्यासाधुत्वापत्तेः । न च व्याकरणव्यु-त्पाद्यत्वात्तथा, शक्त्यभावे लक्षणाया अप्ययोगादर्थवत्त्वाभावे प्रातिपदिक-संज्ञाभावेन तद्व्युत्पाद्यत्वस्याप्ययोगात् । न च विजयः पराजयः इत्यादिद्योतक-घटितसमुदाय इव चरमवर्णशक्त्यापि कल्शादिसमुदाये प्रातिपदिकसंज्ञासंभवः । तत्र कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञाविधानात् । न चैतत्सूत्रमर्थवदितिसूत्रस्य प्रपञ्च एव न तु विधायकम् । देवानित्यादेः प्रातिपदिकसंज्ञावारणाय अप्रत्यय इत्यस्य प्रत्ययतदन्ताभिन्नार्थकतया समासादौ प्रत्ययान्ते ततः प्रातिपदिकसंज्ञाया असंभवादित्यधिकं शब्दपरिच्छेदीयप्रकाशे ।

यत्तु अतीतेऽपि यत्ने वर्तमानत्वादिबोधपरत्वेन पचतीत्यादिप्रयोगापत्तेर्वर्त-मानत्वादियत्नयोरेकोच्चारणान्तर्भावेन शक्तिः पुष्पवन्तादिवत् । इत्थं च तिप्त्वा-दिकमेव शक्ततावच्छेदकमिति । तन्न । रथो गच्छति गगनेन रथो याते इत्यादौ वर्तमानत्वबोधनापत्तेः । अतीते यत्ने पचतीति प्रयोगापादनं चातीते व्यापारादौ रथो गच्छतीत्यादिप्रयोगापादनेन तुल्यम् । मिलितानुभावकताशक्त्या तुल्यसमा-धानं च । नहि शक्तिवल्लक्षणाऽप्येकोच्चारणान्तर्भावेन संभवति तिप्त्वत्वत्वाद्य-नेकावच्छिन्नानन्तविषयवर्तमानत्वादौ यत्नसन्तर्भाव्यानन्तशक्तेः कल्पनामपेक्ष्य आख्यातत्वावच्छिन्नस्य यत्ने लट्त्वाद्यवच्छिन्नस्य वर्तमानत्वादौ शक्तिकल्पनैव लघीयसी । वस्तुतो यत्ने शक्तौ वर्तमानत्वादौ निरूढलक्षणैवेति दिक् ।

यत्नो वाच्य इति । अत्र यत्नत्वावच्छेदेन वाच्यत्वान्वयादन्वयितावच्छेद-कस्य यत्नत्वस्य प्रकृते शक्यसंबन्धरूपवाच्यतावच्छेदकत्वलाभस्तेन व्यापारत्व-त्वादिनाऽपि यत्ने वाच्यतोपगमात्र सिद्धसाधनावकाशः । आख्यातस्येत्य-नन्तरं यत्नत्वेनेति वा पूरणीयम् । पचतीत्यादि । पाकं करोतीत्यादौ विविच्य करोतिना कृञ्धातुना शक्त्योभयबोधकतास्य जानातीत्यादिघटकाख्यातभि-न्नस्य सर्वाख्यातस्य विवरणात् । भावः तुल्यत्वार्थबोधादित्यर्थः । वस्तुतः करोति-नेति तृतीयाभेदेन तथा च यत्नार्थककृञ्धातुकविवरणवत्त्वादित्यर्थः । यच्च समानार्थकतया यस्य बोधकं तत्तस्य विवरणं, भवति हि पचतीत्यस्य चरमपद-लक्षणया स्वपरत्वात्पाकं करोतीत्यस्य च चरमपदलक्षणया स्वसमानार्थकपरत्वा-त्तयोरभेदेनान्वयबोधः । प्रायशो विवरणस्थले बहुव्रीहिसमासोत्तरं प्रथमान्तता-स्वीकारात् । वृक्षो महीरुह इत्यादौ प्रसिद्धवृक्षादिपदार्थे महीरुहपदवाच्यत्वादि-बोधाच्च विवरणत्वम् । तदयं प्रयोगः । यत्नः यत्नत्वं च आख्यातस्य शक्यः शक्यतावच्छेदकं वा आख्यातविवरणत्वात् । शक्तत्वं तदवच्छेदकत्वं वा

हेतौ सत्य । विवरणे यत्तार्थकत्वम्भ्रात्वभेदकथन चाभिहितशङ्कान्युदासाय ।
अनाप्तयोक्तत्वशङ्कामपाकरोति—व्यवहारादिवेति । आप्तवोद्धाभ्यामनुमानेन
शक्तिग्राहकत्वमाम्यम् । व्युत्पत्तेः शक्तिप्रमात । गङ्गायां तीरे इत्यादिविवरणात्
शक्तिप्रमानुदयादाह—बाधक विनेति । इत्थं यद्यत्पदविवरणं तत्तत्पदशक्य
मिति सामान्यमुक्त्वा तौ तत्र व्यभिचारवारणाय हेतावपि बाधकाभावो निवे
श्यत इति भाव । ननु यत्नाश्रयेऽपि पचति पाकयत्नवानिति विवरणसत्त्वा
द्व्यभिचार । कर्तुं प्रथमान्तपदलभ्यत्वं बाधकमिति चेत् यत्नस्याख्यातलभ्यत्व
तथा । किंच करोतिविवरण मन्दिग्धं, मीमांसकैर्व्यापारवाचित्वेन विवरणादत
आह—किं करोतीति । किमित्यस्य क्रियाविशेषणत्वात् कीदृग्यत्न इत्यर्थं ।
यथाश्रुते कर्मप्रश्ने पाकमित्येवोत्तर स्यात् अत एवोक्त यत्नप्रश्ने इति । तेना
अनन्वयेऽपि प्रश्नविषयत्वाभावलाभात् पचतीत्युत्तरे न्यूनत्वम् । वस्तुत का
कृतिरित्यादिकृतिस्वरूपप्रश्नवारणाय किं करोतीति कर्मविशिष्टयत्नस्य वारणाय
च यत्नप्रश्न इति । अत्र जिज्ञासाविषयविषयिणी कृतिरिति प्रश्नवाक्यार्थ । किं
पदस्य जिज्ञासाविषयत्वविशिष्टे शक्त । जिज्ञासा च प्रकृते सविषयकत्वसा
मान्यधर्मप्रकारकज्ञानेच्छा । कृति सविषयिणीति व्याख्या कृते सविषयकत्वेनो
पस्थितौ तद्विशेषधर्मप्रकारकजिज्ञासाया औ सर्गिकत्वात् । यद्यपि कृतश्च सवि
षयकत्वेन सामान्यतस्तद्व्याप्यधर्मतत्त्वेन च ज्ञातत्वात्, पाकविषयककृतिमान
त्वादिना चानुपस्थितेस्तादृशजिज्ञासा दुर्घट । तथाऽपि सविषयकत्वव्याप्य
धर्मांशे निरवच्छिन्नप्रकारताकज्ञानत्वेनेच्छा वाच्या । अत एव पचतीत्युत्तरवाक्या
त्तादृशार्थकिंचिज्ज्ञान एव तस्या निवृत्ति । न च प्रश्नवाक्यात् द्वितीयार्थो विष
यित्व प्रकारतयोत्तरवाक्यात्तु संसर्गतया भासत इति वैषम्यम् । स्वरूपतो विष
यितांशे ज्ञानमात्रस्यैवेष्यत्वेन तद्वैषम्यस्याकिंचित्करत्वात् । यत्तु तादृशज्ञानान्तर
स्याप्यसिद्धत्वेनैवेच्छेति । तन्न । तदुत्तरवाक्यात्तादृशज्ञानेऽपि ज्ञानान्तरस्यासि
द्धत्वात् इच्छाया अनिवृत्त्यापत्तेरिति दिक् । प्रश्नापकबुद्धिविषयधर्मवति
किम शक्ति । प्रश्नापकबुद्धि प्रश्नजनकजिज्ञासाजनकबुद्धि, सा च सामा
न्यधर्मेण ज्ञातस्यानिर्धारितविशेषरूपेणोपस्थितिस्तया च को घट इत्यादावनिर्धा
रितविशेषधर्मवान् घट इत्यर्थं । जिज्ञासालाभस्तु किंपदेन शक्यतावच्छेदका
नुगमकप्रविष्टत्वेनार्थापत्तेरिति ग्राह्य । पचतीत्युत्तरस्येति । पचतीत्यस्य यत्नप्रश्नो
त्तरत्वं यत्नार्थकत्वं विनाऽनुपपन्नम् । तत्तस्य तत्त्वनिश्चयात् । तस्य तदर्थकत्वं
च तद्रूपत्वाख्यानात्मकमेवेत्याशय । अचेतनेति अचेतनविशेष्यकबोधजनके

वा परम्परासंबन्धेन, शरीरे च स्वसमवायिसमवेतत्वलक्षणेन परम्परासंबन्धेन, असाधारणतदनुकूलताश्रयो व्यापारश्च न क्वचिदात्मनि संभवतीति भावः । यथा स्वसमवायिसमवेतशरीरारम्भकादृष्टवत्त्वादिरूपपरम्परासंबन्धेन तादृगतिदाश्रयत्वमात्मनः तथा तदनुकूलव्यापारस्य नाडीक्रियादेरप्यात्मनि तेन संबन्धेन सत्त्वमसभवादुक्त विरत इति । कालस्य तत्त्वकल्पस्य विद्यमानत्वस्य चानुकूलव्यापारो न कश्चिद् घटत्वादौ संभवतीति भावः ।

यत्तु विद. सत्तार्थकतया तदनुकूलव्यापारस्यैवासंभव इति भाव इति, तन्न, सत्ताजातेस्तदर्थत्वे अस्तीत्यादौ घटत्वाद्यर्थानीतत्वाय(न)न्वयापत्ते ।

[illegible]

ते । अतएव जानातीत्यस्य पूर्वं गच्छतीति पाठः प्रामादिकः, क्वचिदत्र मात्रपदसंवलितो न पाठः जानातीत्यस्य पूर्वं गच्छतीत्यपि पाठः । तत्र गच्छति-जानातीत्यादौ धात्वर्थानुकूलकृतिव्यापारयोरप्रतीतावप्याश्रयत्वस्य प्रतीतौ न तत्र लक्षणासंभव इत्यत उक्तं गत्यादीति, आदिना ज्ञानादिपरिग्रह इति ध्येयम् । 'आश्रयत्वमिति' निरूढलक्षणा इत्यर्थेनानेनान्वयः, ज्ञानादीनां चतुर्णामाश्रयत्वं समवायेनावच्छेदकतया च बोध्यम् । तेनात्मनि चैत्रादिशरीरे च जानातीत्यादिप्रयोगोपपत्तिः । न वा घटो जानातीत्यादिप्रयोगापत्तिः । गत्यादेराश्रयत्वं च समवायेनैव वाच्यं तेन यथाकथञ्चित् संबन्धेनाश्रयत्वमादाय नातिप्रसङ्गः । न चैवमात्मा गच्छतीत्यादिप्रयोगो न स्यादिति वाच्यम् । इष्टत्वात् । अहं गच्छामि त्वं गच्छसीत्यादौ उच्चारयितृादिशरीरस्यैव चैत्रत्वादिरूपेणास्मदादिपदशक्यतया नानुपपत्तिः । अतएव आत्मा पचतीत्यादिप्रयोगवारणाय अवच्छेदकतासंबन्धेनैव कर्तृपदार्थस्य आख्यातार्थयत्नान्वयस्य साकाङ्क्षत्वनियमेऽपि त्वं पचसि अहं पचामीत्यादौ नान्वयानुपपत्तिः । उच्चारयित्रादिशरीरस्यैव चैत्रत्वादिरूपेण युष्मदादिशब्दवाच्यतया अवच्छेदकतासंबन्धेनैव प्रवृत्तेस्तत्रान्वयसंभवादिति ध्येयम् । ननु तथाप्यनुकूलव्यापारे निरूढलक्षणा आवश्यकी, वर्णो नश्यतीत्यादौ वर्णादिषु वर्तमानोत्पत्तिकनाशविशिष्टव्यापारवत्त्वप्रतीतेः । तादृशव्यापारवत्ता च नाशकतावच्छेदकसंबन्धेन इत्यत आह–नश्यतीत्यत्रापीति । तत्त्वेनैवानुपपत्तेरिति भावः । यद्यपि प्रतियोगितासंबन्धेन आश्रयत्वमेवार्थस्तत्रापि संभवति आत्मा नित्यानां यत्नेन संबन्धितासाधारणाश्रयत्वस्यैव लक्ष्यत्वात् । तथापि प्रतियोगितान्वयप्रकारेणैवानुभवस्य तत्र सर्वजनसिद्धत्वात् तत्परित्यागः । ननु रथो गच्छति चैत्रो जानातीत्यादौ वर्णो नश्यतीत्यादौ च धात्वर्थ–कर्तृपदार्थ-

योश्च संसर्गमर्यादया आश्रयत्व-प्रतियोगित्वयोर्भानसंभवात् 'मित्र' लक्षणाभ्युपगमेन, आख्यातस्य तु वर्तमानत्वं संख्या च यथायथमर्थोऽस्तु इत्यत आह-चैत्र इति। अन्वयाबोधादिति। धात्वर्थे कर्मतासंबन्धेन तण्डुलस्य कर्तृतानिरूपकत्वसंबन्धेन चैत्रस्यान्वयाबोधात्। एवं धात्वर्थपाकस्य कर्तृतासंबन्धेन चैत्रे कर्मतासंबन्धेन च तण्डुले अन्वयाबोधाच्चेत्यर्थः। इदमुपलक्षणं ज्ञानं चैत्र इत्यादौ आश्रयतासंबन्धेन चैत्रादौ ज्ञानादेरन्वयाबोधाच्चेत्यपि द्रष्टव्यम्। एतेन पचति तण्डुल इत्यादौ कर्मतासंबन्धेन तण्डुलादेर्धात्वर्थपाकविशेष्यकत्वेनान्वयबोधवारणाय धात्वर्थस्य नामार्थविशेष्यतया अन्वयबोधस्याव्युत्पन्नत्वात्, प्रकृते च नामार्थकर्तृविशेषणतया गमादिधात्वर्थस्यान्वये न किमपि बाधकमित्यपि प्रत्युक्तम्। स्तोकं पचतीत्यादौ धात्वर्थ-नामार्थयोरभेदसंसर्गेणान्वयबोधदर्शनादुक्तं भेदेनेति, अभेदातिरिक्तसंबन्धेनेत्यर्थः, अभेदस्तादात्म्यं, 'साक्षादन्वयस्य' साक्षात्त्वेनान्वयस्य, 'अव्युत्पन्नतया' शब्दाजन्यतया, नामार्थान्वितस्य विभक्त्यर्थस्य धात्वर्थे धात्वर्थान्वितस्य विभक्त्यर्थस्य च नामार्थे बोधस्य शब्दजन्यत्वादुक्तं साक्षादिति। तद्भानेति। आश्रयत्व-प्रतियोगित्वयोर्भानेत्यर्थः। अत्र प्रातिपदिकमव्ययातिरिक्तत्वेन विशेष्यं, तेन न कलञ्जं भक्षयेदित्यत्र न्यायनये नञर्थस्य विशेषणताविशेषसंबन्धेन धात्वर्थे अन्वय। गुरुनये अनुयोगितासंबन्धेन धात्वर्थस्य नञर्थे अन्वयो नानुपपन्न.। अतएव ज्ञानवदिच्छा इत्यादावपि वत्यर्थस्य धात्वर्थे अनुयोगितासंबन्धेन प्रतियोगितया च साक्षादन्वयो नानुपपन्न। न चाभेदातिरिक्तसंबन्धेन पाकज्ञानादिप्रकारक-चैत्रादिविशेष्यक शाब्दबोध पचति चैत्र ज्ञानं चैत्र इति वाक्यात् योग्यतातात्पर्यादिज्ञानसत्त्वेऽपि कुतो न जायते सति कारणस्तोमे कार्यानुत्पादस्यासंभवादिति वाच्यम्। तादृशानुपूर्वीनस्तादृशान्वयबोधोऽनुभवसिद्धस्तादृशानुपूर्व्यास्तत्र हेतुतया तद्विशेषकारणविरहादेव ततस्तदनुत्पादात्।

केचित्तु धात्वर्थनिष्ठविषयतानिरूपिततादात्म्यातिरिक्तसंबन्धावच्छिन्ननिपातातिरिक्तपदार्थनिष्ठविषयतासंबन्धेन शाब्दबोधोत्पत्तिं प्रति धातूत्तरप्रत्ययजन्योपस्थितिर्विशेष्यतासंबन्धेन कारणम्। यद्वा तादृशविषयतानिरूपितोक्तसंबन्धावच्छिन्ननामार्थनिष्ठविषयतासंबन्धेन शाब्दबोधोत्पत्तिं प्रति निपातजन्योपस्थितिर्विशेष्यतासंबन्धेन कारणमतो न तस्मात् तादृशबोध. इत्याहु। तदसत्, धात्वर्थनामार्थयोरनुगततानतिप्रसक्तयोर्दुर्वचत्वादिति ध्येयम्॥ २॥

(राम०) एतन्मतं दूषयितुं स्वमतं दर्शयितुमाह—अन्यदीयेत्यादि। अन्यदीयेत्यादिरमारभ्य नन्वाद्यन्त एको ग्रन्थ। स्पर्शयगमनानुकूलनोदनादिमाने निश्चले हस्तादावित्यर्थः। ननु गमनोपहितव्यापार एव गच्छतीत्यस्यार्थो वाच्य इति नोक्तदोष इत्यत आह—जानातीति। 'गच्छतीत्यादि' विषयुदाहरणबाहुल्यप्रदर्शनाय। ननु जानातीत्यादौ ज्ञानानुकूलो व्यापार आत्मनि

मनोयोगादिरेव प्रतीयतामित्यत आह—विद्यत इति । धात्वर्थस्य वर्तमानकाल-संबन्धादिरुक्तकूलव्यापारस्य गमनादौ बाधात् गगनं विद्यत इत्यन्वयानुपपत्ति-रित्यर्थः । निद्रातीति । मेध्यानाममनाडीविशेषेण मनसः संयोगो निद्रा, स च संयोग आत्मनि स्वाश्रयमनःप्रतियोगिकविलक्षणसंयोगलक्षणपरम्परासंबन्धेन वर्तते इत्ययं पुरुषो निद्रातीति प्रयोग उपपद्यते । विलक्षणसंयोगश्च तत्तदात्मी-यादृष्टाकृष्टमनसि तत्तदात्मीयत्वाद्यवच्छेदनियामकतया सिद्धः केवलमात्म-मनसो-रेव । एवं मनःप्रतियोगिकसंयोगेन मनो न मनसीति मेध्या निद्राति मनो निद्राति इत्यादयो न प्रयोगाः । न च निरुक्तपरम्परासंबन्धेन मेध्यान्तःकरणसंयोगो यथा आत्मनि वर्तते तथा तदनुकूलव्यापारो मेध्याक्रिया मनःक्रिया वा स्वजन्य-मेध्यान्तःकरणसंयोगाश्रयमनःप्रतियोगिकविलक्षणसंयोगेनात्मनि वर्तते इत्यत्र क्रियानुकूलव्यापारबोधः संभवत्येवेति वाच्यम् । तादृशपरम्परासंबन्धेन तदनु-कूलव्यापारस्यात्मनि विशिष्टबुद्ध्यभावेन तादृशपरम्परया संबन्धत्वे मानाभा-वात् । मेध्यान्तःकरणसंयोगस्य च उक्तपरम्परासंबन्धेनात्मनि विशिष्टबुद्ध्या उक्त-परम्परया संबन्धत्वमात्रकल्पकमन्यथा स्वनिद्राया विशिष्टबुद्ध्यनुत्पादापत्तेः । अत एव यत्र प्रयत्नयोग्यनाड्यवच्छेदेन प्रयत्ने जाते तेन प्रयत्नेन तन्नाडीकर्म जायते तेन च कर्मणा तन्नाड्या मनसि मेध्यायां वा नोदनाभिघातौ जायेते ततो मनसो मे-ध्याया वा कर्मोत्पत्तिः तदनन्तरं उत्तरदेशे मनसि मेध्यायां वा मेध्याया मनसा वा संयोगस्तत्र मेध्या-मनःसंयोगानुकूलायास्तत्तन्नाड्यवच्छिन्नकृतेरात्मनि संभ-वेन कथं तादृशकृतेरप्रतीत्यभिधानमित्यपास्तम् । ईदृशानुकूलत्वसंबन्धेन धात्व-र्थस्याख्यातार्थे अन्वयविरहात् । अन्यथा तण्डुलक्रयणानुकूलकृतावपि तुल्यन्यायेन पाकादेरनुकूलत्वसंबन्धेनान्वयापत्त्या अपचत्यपि तादृशक्रयकर्तरि पचतीति प्र-त्ययप्रसङ्गात् । अत्र च क्रियानुकूलकृति-व्यापारयोरप्रतीतेराश्रयत्वे निरूढलक्षणे-त्यर्थः । गच्छतीत्यादौ कर्त्राख्याते आश्रयत्वे निरूढलक्षणा वाच्येत्यर्थः । क्रियानुकू-लकृति-व्यापारयोः प्रतीतौ बाधात्रैव बोधः स्यादिति निरूढलक्षणायां मानाभाव एव स्यादित्यप्रतीत्यन्तमुक्तं, लक्षणाया निरूढत्वञ्चानादितात्पर्यानादिप्रयोगयोः सामानाधिकरण्यम् । न चैवमनादितात्पर्यानादिप्रयोगयोः सत्त्वे घटादौ घटप-दादिवत् कर्त्राख्यातस्याप्याश्रयत्वे शक्तिरेव कल्प्यतामिति वाच्यम् । यत्र लघ्वर्थे गुर्वर्थे चानादितात्पर्यानादिप्रयोगौ तुल्यौ तत्र लाघवेन लघ्वर्थे शक्तिर्गुर्वर्थे निरूढलक्षणेति सर्वसिद्धम्, अन्यथा नीलादिपदस्य नीलरूपादाविव नीलरूपवद्दा-दावपि शक्तिप्रसङ्गात् अनादितात्पर्यानादिप्रयोगयोरुभयत्र तुल्यत्वात्, तथाच प्रकृतेऽप्याख्यातस्य कृतौ आश्रयत्वे च तयोस्तुल्यत्वे कृतावेव शक्तिकल्पनं युक्तं न त्वाश्रयत्वे, आश्रयतात्वस्य जातीतरत्वेन कृतित्वजात्यपेक्षया गुरुत्वात् । सामा-न्यस्य-विशेषस्यवत् जातित्वमदितरत्वेऽप्यादावपि लाघव-गौरवपदार्थत्वादिति भावः । इत्यत्र निरूढत्वेन शक्तिकल्पनप्रसक्तिवारणाय निरूढेत्युक्त, तथाच निरू-

ह्यपि अनादितात्पर्यानादिप्रयोगसमानाधिकरण्याश्रयत्वांशे आख्यातस्य शक्तिकल्पने न तु शक्तिलक्षणयोरिति निरूढलक्षणात्वस्याप्यदोषः, अन्यथा निरूढत्वप्रदर्शनस्यानुपयोगित्वापत्तेरिति दिक् । गच्छतीति, गच्छतीत्यादिप्रयोगनिरूढत्वमेव निरूढत्वमित्यपि कश्चित् । ननु गच्छतीत्यादौ क्रियानुकूलकृतिव्यापारयोरुपस्थित्या आख्यातस्य कृतिव्यापारयोर्वाचकत्वाभाव एवायाति न तु तदाश्रयत्वे निरूढलक्षणेत्यत आह,—गत्यादीति । आदिपदेन ज्ञानादिपरिग्रहः, अनुकूलं आश्रयत्वं, मात्रपदस्य संघातार्थत्वं, गत्याश्रयत्वप्रतीतिरेव तत्राश्रयत्वलक्षणासाधकत्वात् । यद्वा अननुगतया आश्रयत्वप्रतीतिमात्रं यदि आश्रयत्वनिरूढलक्षणासाधकं तदा गङ्गायां घोष इत्यादौ तीरादिबोधकत्वेन गङ्गापदादेरपि तीरादौ निरूढलक्षणापत्तिरित्याशङ्कामपाकर्तुं मात्रपदमुक्तं, तथाच गङ्गायां घोष इत्यादौ गङ्गापदात् कदाचित् तीरस्य, कदाचिच्च गृहादिबोध इत्येवमानुगत्यानादिप्रयोगानादित्वयोरभावेन न निरूढलक्षणा । गच्छतीत्यादौ सर्वस्मिन् काले सर्वेण पुरुषेण गत्याश्रयत्वमेव प्रतीयते न त्वर्थान्तरमिति तदाश्रयत्वे निरूढलक्षणेत्यर्थः ।

यत्तु अचेतनस्थलेऽपि रथो गच्छतीत्यादौ गत्याश्रयत्वं सचेतनस्थलेऽपि चैत्रो गच्छतीत्यादौ च गमनानुकूलकृतिरर्थः, सापि आत्मनि गच्छतीत्यादौ समवायेन चैत्रो गच्छतीत्यत्रानवच्छेदकतासंबन्धेनेति, तदुच्छम् । तथासत्यर्थतो भेदेन व्युत्पत्तिभेदकल्पनापत्तेस्तस्माच्चेतनाचेतनसाधारणमाश्रयत्वमेव गच्छतीत्याद्यर्थः । आश्रयतात्वञ्च सर्वाश्रयत्वसाधारणमेकं, तेन च रूपेण क्वचित् समवायसम्बन्धावच्छिन्नं क्वचिदवच्छेदकतासम्बन्धावच्छिन्नं क्वचित् परम्परासम्बन्धावच्छिन्नमाश्रयत्वं प्रतीयते, आद्यं चैत्रो गच्छतीत्यादौ, द्वितीयं चैत्रो जानातीत्यादौ, तृतीयं चैत्रो निद्रातीत्यादौ । ननु घटो नश्यतीत्यादौ नाशानुकूलकृतिव्यापारयोर्बाधादेव नान्वयः । न च संयोगादिनाशानुकूलव्यापारस्य क्रियादेस्तदवृत्तित्वेन न तत्र बाध, तथा सति ध्रियमाणेऽपि तादृशे घटे अयं घटो नश्यतीति प्रयोगप्रसङ्गात् । एतेन गच्छतीत्यादौ गत्याश्रयत्वादिवत् नश्यतीत्यादावपि नाशाश्रयत्वमर्थ इत्यपास्तम् । तथासति ध्रियमाणे संयोगादिनाशवति अयं नश्यतीत्यादिप्रयोगप्रसङ्गादित्यत आह—नश्यतीत्यादावपीति । प्रतियोगित्व इति । न चैवमपि भाविनाशप्रतियोगितामादाय ध्रियमाणेऽपि घटे नश्यतीति प्रयोगापत्तिः, आख्यातार्थवर्तमानत्वस्य धात्वर्थनाशान्वयित्वस्वीकारात् । एवमन्यदूह्यम् । न च गच्छतीत्यादौ गत्यादेराश्रयतासंबन्धेन नश्यतीत्यादौ प्रतियोगितासंबन्धेन नाशस्य च प्रथमान्तपदार्थान्वय एव साक्षात् प्रकारतया भवत्वोऽस्तु किमाश्रयत्व–प्रतियोगित्वयोर्निरूढलक्षणयेत्यत आह—धात्वर्थेति । तथाच धात्वर्थगत्यादेराश्रयतासंबन्धेन नामार्थविशेष्यकान्वयस्य धात्वर्थस्याप्रत्ययार्थविशेष्यत्वनियमविरोधेनासंभवात् तत्र तदाश्रयत्वादौ निरूढलक्षणावश्यकत्वमित्यर्थः, लोके पचतीत्यादौ क्रियाविशेषस्य स्वोत्पत्त्याश्रयसंबन्धेन धात्वर्थे पाके धात्वर्थपादस्–भेदेन-

तेनाश्रयत्वप्रकारकान्वयबोधानङ्गीकारात् । एवं नश्यतीत्यादौ प्रतियोगित्वलक्षणानङ्गीकारे घटो न नश्यतीत्यादौ नञर्थान्वयानुपपत्तिः । तथाहि यद्याश्रयतासंबन्धेन नाशस्याभावः प्रत्येतव्यस्तदा स्ववृत्तिसंयोगादिनाशस्य घटे सत्त्वेन बाधापत्तिः । अथ प्रतियोगितासंबन्धेन नाशस्याभावः प्रतीयतामिति चेत्, न, निरूपकत्वादिवत् प्रतियोगित्वादेः प्रतियोगितावच्छेदकसंबन्धत्वविरहात् । प्रतियोगित्वे लक्षणास्वीकारे च नाशप्रतियोगित्वस्य स्वरूपसंबन्धेनाभाव एव प्रतीयते तत्र च न कोऽपि दोषः । एवं घटं जानातीत्यादौ कर्मत्वस्य केवलसंबन्धत्वे घटं न जानातीत्यादौ नञर्थान्वयानुपपत्तिर्विषयत्वस्य प्रतियोगितावच्छेदकसंबन्धताभावादेवमन्यद्बोध्यमित्याहुः ।

नव्यास्तु चैत्रो ज्ञानमित्यादौ समवायसंबन्धेन चैत्रविशेष्यकज्ञानप्रकारकान्वयबोधवारणाय चैत्रविशेष्यक-ज्ञानप्रकारकशाब्दबुद्धिं प्रति ज्ञापदानन्तरविभक्तिजन्याश्रयत्वोपस्थितित्वेन हेतुता वाच्या, तथाच चैत्रो जानातीत्यादौ आश्रयत्वलक्षणाविरहे तादृशोपस्थितिविरहादेव नान्वयः इत्याश्रयत्वलक्षणाङ्गीक्रियते, एवं पाकस्तण्डुल इत्यादौ पाकविशेष्यक-तण्डुलप्रकारकशाब्दबोधवारणाय पाकविशेष्यकतण्डुलप्रकारकशाब्दबुद्धिं प्रति तण्डुलपदोत्तरविभक्तिजन्य-कर्मत्वाद्युपस्थितित्वेन हेतुता वाच्येति तदभावादेव चैत्रः पचति तण्डुल इत्यादौ कर्मत्वादिसंबन्धेन पाकादौ तण्डुलप्रकारकान्वयबोधो न जायते, यदा च तत्रापि तण्डुलपदोत्तरप्रथमाविभक्तौ कर्मत्वादिलक्षणा क्रियते तदा जायत एव पाकादौ तण्डुलप्रकारको बोधः । नन्वेवं तण्डुलं पचतीत्यादौ विभक्तिजन्य-कर्मत्वोपस्थितिसहकारेण पाकादौ कर्मतासंबन्धेन तण्डुलप्रकारकान्वयबोधोऽस्तु न तु कर्मताविशेष्यकतण्डुलप्रकारको बोधः । तण्डुलं पचतीत्यादिसमभिव्याहारस्य पाकविशेष्यकतण्डुलकर्मकत्वप्रकारकशाब्दत्वापेक्षया लाघवेन पाकविशेष्यककर्मतासंसर्गकतण्डुलप्रकारकशाब्दत्वादीनां कार्यतावच्छेदकत्वकल्पनाया एव न्याय्यत्वादिति चेत् सत्यमेतत्, यदि नानुभवविरोधो भवेदिति । वयं तु केवलं तण्डुलमित्यादौ कर्मतांशे तण्डुलप्रकारकबोधस्यानुभवसिद्धतया तण्डुलमिति वाक्यस्य कर्मताविशेष्यकतण्डुलप्रकारकशाब्दत्वं कार्यतावच्छेदकं वाच्यं, तथाच तण्डुलं पचतीत्यादावपि सामग्रीबलादेव तण्डुलकर्मकत्वेन पाकविशेष्यकान्वयबोधोऽवश्यं वाच्यः । न च कर्मत्वं तण्डुलीयं पाकस्तण्डुलीय इत्यन्वयबोधः स्यान्महावाक्यार्थबोधे कर्मत्वविशेष्यकत्वप्रवेशे गौरवादिति वाच्यम् । तथा सति तण्डुलं पचतीत्यादौ एकवाक्यताभङ्गप्रसङ्गात् विषयभेदस्य वाक्यभेदकत्वात् । किञ्च चैत्रो मांसं पचति न तण्डुलमित्यादौ पाके नञर्थतण्डुलकर्मत्वाभावस्य प्रतीत्यर्थं कर्मतांशे तण्डुलस्य प्रकारता वाच्या कर्मत्वादेर्वृत्त्यनियामकतया कर्मतासंबन्धावच्छिन्नप्रतियोगिताक-तण्डुलाभावबोधासंभवात् आश्रयत्वादिसंबन्धावच्छिन्नप्रतियोगिताक-तण्डुलाभावस्याभ्युपगमे च तण्डुलपाकस्थलेऽपि तथा प्रयोगप्रसङ्गादिति वदामः ।

ननु जानातीत्यादिचतुष्टयस्य व्यापारे आख्यातस्य लक्षणयैवोपपत्तौ तत्राश्रयत्वे लक्षणाकल्पनमनर्थकमिति चेन्न । अत्यन्तव्यापारे (?) लक्षणाकल्पनापेक्षया आश्रये तत्कल्पनाया लघुत्वात् । विद्यते निद्रातीत्यादौ आख्यातस्य व्यापारबोधकत्वप्रसक्तिरेव न वर्तमानकालसम्बन्धित्वस्य निद्धात्वर्थस्य सिद्धामन संयोगरूपस्य निद्रापदार्थस्य चानुकूलो यो व्यापारस्तत्पुरुषादावभावादिति भाव ।

ननु जानातीत्यादौ आख्यातस्य आश्रयत्वे लक्षणाकल्पने चैत्रोऽय घट जानातीति प्रयोगकाले घटज्ञानाभाववति मैत्रे मैत्रोऽय घटं जानातीति प्रयोगापत्ति । एककालीनत्वसम्बन्धावच्छिन्नतदाश्रयत्वस्य तदानीं मैत्रेऽपि सत्वात् तत्तत्सम्बन्धावच्छिन्नाश्रयत्वे लक्षणाकल्पने पुनरतीव गौरवात् । तदपेक्षया व्यापारे लक्षणाकल्पनमेव न्याय्योऽतिप्रसङ्गस्य तूपदर्शितरीत्या वारणीयत्वात् । यदि चाख्यातस्याश्रयत्वत्वेनाश्रयत्वसामान्ये लक्षणा जानातीत्यादौ चाश्रयत्वैत्वरूपेण समवायसम्बन्धावच्छिन्नाश्रयत्वस्यैव बोधस्तथैव कार्यकारणभावकल्पनात्तथापि व्यापारे लक्षणापेक्षया गौरवापत्तिरित्यत आह—गत्यादिमत्त्वेति । आदिना ज्ञानादिमत्त्वपरिग्रहः । मात्रपदेन व्यापारव्यवच्छेदः । तथा चानुभवानुरोधेनागत्या तत्तत्सम्बन्धावच्छिन्नाश्रयत्वे लक्षणा तथाविधगुरुतरकार्यकारणभावो वा कल्प्यत इतिभाव ।

केचित्तु ननूपदर्शितस्थलेषु व्यापारस्यैवाश्रयत्वस्याप्यप्रतीतेरल तत्र लक्षणयेत्यत आह—गत्यादिमत्त्वेतीत्याहु । नन्वाख्यातस्य मुख्यार्थबाधस्थले सर्वत्राश्रयत्वे लक्षणाकल्पन न सम्भवति । घटो नश्यतीत्यादौ प्रतीत्यसम्भवात् । घटस्य नष्टत्वेन नाशाश्रयत्वाभावात् प्रतियोगितासम्बन्धेन नाशत्वावच्छिन्न प्रति प्रतियोगिनस्तादात्म्यसम्बन्धेन हेतुत्वानुरोधेन नष्टस्यापि प्रतियोगितासम्बन्धेन नाशाश्रयत्वाङ्गीकारे पुनर्लाघवात् प्रतियोगित्व एव लक्षणाकल्पनस्योचितत्वादित्यतस्तथैव आह—नश्यतीत्यादौ चेति । निरूढेति अनादिसिद्धेत्यर्थं ।

ननूपदर्शितबहुप्रयोगसत्वे तत्र शक्तिरेव किमिति न कल्प्यत इति चेत् यत्न त्वरूपलघुशक्यतावच्छेदकमभवेन तत्तत्सम्बन्धघटिताश्रयत्वत्वावच्छिन्ने शक्तिकल्पने गौरवज्ञानरूपप्रतिबन्धकस्य दत्तजलाञ्जलि प्रसज्येत । न चाश्रयत्वस्यातिरिक्तत्वमभ्युपेत्य तदवच्छिन्नशक्तिकल्पने बाधकाभाव इति वाच्यम् । तर्हि व्यापारत्वमतिरिक्तमभ्युपेत्य तदवच्छिन्ने शक्तिकल्पनस्योचितत्वात् । न चेष्टापत्ति । तथा सति विनिगमनाभावादनन्तलक्षर्मावच्छिन्ने शक्तिकल्पनापत्तेश्च लाघवात्तु तयत्नत्वावच्छिन्न एवाख्यातस्य शक्तिकल्पने बाधकाभावात् । एतेन समवायित्वमतिरिक्तं स्वीकृत्य तदवच्छिन्ने आख्यातस्य शक्तिरन्यत्र लक्षणेत्यपा-

स्तम्। उपदर्शितविनिगमनाविरहेण तत्तदनन्तधर्मावच्छिन्ने शक्तिकल्पनाप्रयुक्तगौरवस्य जागरूकत्वादित्यग्रे वक्ष्याम।

ननु चैत्रो जानातीत्यादावाश्रयत्वे निरूढलक्षणाकल्पनं निरर्थकमेव। तत्राश्रयता सम्बन्धेन चैत्रे ज्ञानरूपधात्वर्थस्यान्वयेनैवोपदर्शितान्वयबोधोपपत्ते। तत्राश्रयत्वप्रकारकानुभवस्त्वसिद्ध एवेति चिन्तामणिकारमते दूषणमाह—चैत्र पचतीत्यादि। अन्वयाबोधादिति। चैत्र पचति तण्डुल इत्यादौ कर्मतासम्बन्धेन पाके तण्डुलस्य, मैत्र पच्यते तण्डुल इत्यत्र पाके कर्तृतासम्बन्धेन मैत्रस्यान्वया ननुभवादित्यर्थ। धात्वर्थप्रातिपदिकार्थयोरित्यादि। धात्वर्थनामार्थयोरभेदातिरिक्तसाक्षात्सम्बन्धेनान्वयबोधस्याव्युत्पन्नतयेत्यर्थ। अत्र स्तोकं पचतीत्यादावभेदसम्बन्धेन धात्वर्थे नामार्थस्तोकस्यान्वयाद्व्युत्पत्तिभङ्गोऽतोऽभदातिरिक्तेति। ननु तत्र विशेषणविभक्तेरेवाभेदोऽर्थस्तत्रैव स्तोकस्यान्वयोऽभ्युपेयते तथाच तत्राभेदातिरिक्तत्वविशेषणानुपादानेऽपि न दोष। नामार्थप्रत्ययार्थयोरेव तत्रान्वयबोधस्योत्पन्नत्वादिति चेत्। सत्यम्। विशेषणविभक्तेः साधुत्वार्थकत्वेऽभेदार्थकत्वासम्भवात्। तस्या अभेदार्थकत्वेऽपि लुप्तविभक्तिमननुसन्धानस्य स्तोकं पाक इत्यादावभेदसम्बन्धेन पाके स्तोकान्वयबोधस्यानुभवसिद्धतया तत्रैवाभेदातिरिक्तत्वविशेषणव्यावृत्तिदानसम्भवात्। तत्र लुप्तविभक्तेरनुसन्धानं विना शाब्दबोधानङ्गीकारे गत राजपुरुष इत्यादौ राजपदस्य राजसम्बन्धिनि लक्षणया तत्रापि तथा वक्तुं शक्यत्वात्। तण्डुलं पचतीत्यादौ पाके तण्डुलकर्मत्वस्यैव कर्मतासम्बन्धेन तण्डुलस्यापि बोधोपपत्त्या तत्र व्युत्पत्तिभङ्गप्रसङ्गवारणाय साक्षादिति। नामार्थधात्वर्थोभयान्वितविभक्त्यर्थातिरिक्तेत्यर्थ। ननु तथापि 'न कलञ्जं भक्षयेत्' इत्यत्र विध्यर्थबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वान्वितनञर्थाभावस्य धात्वर्थे कलञ्जभक्षणादावन्वयात्तत्रैव व्युत्पत्तिभङ्गपरिहारोऽशक्य इति चेन्निपातातिरिक्तत्वं नाम्नि विशेषणीयम्, स्वीकुर्वतां वा नञ्पदस्याभाववति लक्षणा, तस्याभेदसम्बन्धेन धात्वर्थे अन्वय इति। सम्बन्धमर्यादयेत्यादि। चैत्रो जानातीत्यादौ धात्वर्थनामार्थयो संसर्गमर्यादया साश्रयत्वस्य भानासम्भवादित्यर्थ। तथा चैतादृशव्युत्पत्त्यनुरोधेन नामार्थनिष्ठाभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिपदनिरूपितवृत्तिज्ञानजन्योपस्थिते प्रकारतासम्बन्धेन हेतुत्वं कल्पनीयम्। एवं धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिपदनिरूपितवृत्तिज्ञानजन्योपस्थिते प्रकारतासम्बन्धेनेत्यपी-

**मानत्वादिकं क्वचिदाश्रयत्वादिकमपि वा आख्यातार्थ इति गुरुमतमपि तत्र तत्र तादृशयत्नाननुभवप्रसङ्गादनुपादेयम् ॥ १७ ॥**

इति महोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्यकृत
आख्यातवादः समाप्तः ।

तण्डुलौदनवता गच्छतीत्या...दानमपि बोध्यम् । व्यापारत्वस्याखण्डोपाधित्वे मानाभावः । जनकत्वरूपस्य त्वननुगतत्वम् । एवमाश्रयत्वापेक्षया लाघवेन यत्न एवाख्यातशक्तिरित्याहुः । नन्वविश्रयणादिक्रियाप्रचयः पाकः, तथा च कस्यचित् क्रियायामतीतायामनागतायामपाक्षीत्, पक्ष्यतीति स्यादिति चेत्, न, अपाक्षीदित्यत्र चरमक्रियाध्वंसस्य पक्ष्यतीत्यत्राद्यक्रियाप्रागभावस्यैव भानात्, नियमतः तथैव तात्पर्यात् । यत्तु रत्नकोशमतम्—धात्वर्थो व्यापारः आख्यातार्थ उत्पादकता पचति पाकमुत्पादयतीत्यर्थः । तन्न, उत्पत्तेराद्यक्षणसम्बन्धरूपाया अननुगमात् ।

अत्रेदं बोध्यम्—ओदनः पक्व पच्यत इत्यत्र पचधातोरोदनपाके लक्षणा । तथा चौदनपाकसमानकर्तृक-तदुत्तरमात्रि-भोजन-जन्यफलशाली ओदन इति बोधः ।

केचित्तु ओदनोत्तर-प्रथमायाः कर्मत्वे लक्षणात् तत्पाकेऽन्वेति । ओदनस्तु भावनाया...पि विशेष्यत्वेनान्वेतीत्याहुः । एवं सति ओदनस्य भावनान्वयो न स्यात् । कर्मत्वाद्यनवच्छिन्नस्यैव तदन्वययोग्यत्वात् । इत्यनेनैव कर्मकर्तरि भिद्यते कुसूलः स्वयमेवेत्यादौ कुसूलपदोत्तरप्रथमायाः कर्मत्वं व्यापारश्चार्थः । तेन कुसूलः स्वकर्मकभेदानुकूलव्यापारवान् स्ववृत्तिव्यापारजन्यभेदजन्यफलशाली [illegible]

[illegible]

व्यापारश्च । तेन कुसूलकर्मकभेदानुकूलव्यापारवान् कुसूलवृत्तिव्यापारजन्यभेदजन्यफलवाश्चेति बोध इति बोध्यम् ।

चैत्रं तन्दुलं पाचयति मैत्र इत्यादौ चैत्रपदोत्तरद्वितीयायाः कर्तृत्वलक्षणकर्मत्वमर्थः । णिचश्च व्यापारोऽर्थः । आश्रयत्वे आख्यातस्य लक्षणा णिजर्थः ज्ञप्तिर्वा...वेतनेव...दि तत्र पाचयति पाचयन् इत्यादौ णिचो लक्षणा, आख्यातेन तत्तत्र व्यापारवादि...बोध्यते णिचो निरर्थकत्वमित्याहुः । तथाच चैत्रकर्तृकतन्दुलकर्मको यः पाकस्तदनुकूलव्यापाराश्रयो मैत्र इत्यर्थः । यद्यपि चैत्रमैत्रोभय-

कर्तृकेऽपि पाके इद सम्भवति तथापि चैत्रकर्तृकत्वविशिष्टस्य पाकस्यानुकूलत्व पाकव्यापारयोः संसर्गो बोध्य ।

यद्वा—तत्र णिच आख्यातस्य व्यापारोऽर्थ । चैत्र तण्डुल पाचय मैत्र इत्यादौ चैत्रकर्तृकतण्डुलकर्मकपाकानुकूलव्यापारवान्मैत्र इति बोध । अतएव कर्त्रोरपि पचति पाचयति शब्दयोर्विलक्षणबोधहेतुत्वम् । चैत्र घट ज्ञापयतीत्यादौ चैत्रपदोत्तरद्वितीयायाः समवेतत्व घटपदोत्तराया विषयित्व समवेतत्वं घटविषयकज्ञानानुकूलव्यापारवानित्यर्थ । चैत्रं तण्डुलं पाचयति मैत्र इत्यादौ णिजर्थे व्यापारे चैत्रपदोत्तरद्वितीयार्थ । चैत्रकर्तृकत्वं जनकतासम्बन्धेनान्वेतीति केचित् ।

चैत्रमैत्रौ मिथ आक्षिप्यत इत्यत्र मिथ पदार्थ कर्मत्व तत्तत्कर्मत्व वा । तत्राक्षेपेणान्वयि । तथा चैत्रकर्मकाक्षेपणानुकूलकृतिमांश्चैत्र. मैत्रकर्मकाक्षेपणानुकूलकृतिमांश्चैत्र इति बोध । तत्तत्समभिव्याहारस्य तादृशबोधहेतुत्वात् चैत्रकर्मकाक्षेपानुकूलकृतिमांश्चैत्र इति धीरिति ।

विद्यानिवासपुत्रस्य न्यायवाचस्पतेरियम् ।
आख्यातवादव्याख्यानमानन्दयतु कोविदान् ॥ १ ॥

समाप्तेयमाख्यातवादरौद्री ।

( रामकृ० ) गुरुमतमाह—तत्रतत्रेति । सकर्मकधातुविशेषेष्वित्यर्थ । व्यापारविशेष कर्तृत्वनियामको व्यापारविशेष । अतएव मण्डनमतोक्तो विभागानुकूलेत्यादिदोषोऽपि । अत आह । सर्वत्रेत्यादि । पचतीत्यादौ विक्लित्त्यनुकूलत्वेन संयोगविशेषानाश्रयत्वेऽपि कृतिरूपव्यापारात्मकधात्वर्थाश्रयत्वमस्त्येवेति । न कर्तृत्वानुपपत्तिरिति । आख्यातार्थं विवेचयति—संख्येति । नश्यतीत्यादावाश्रयत्वार्थकत्वासम्भवादाह—क्वचिदिति । तत्र च प्रतियोगित्वमर्थ इति प्रागेवोक्तम् । तादृशेति । इद च वर्तमानत्वाद्यनुभवस्य सार्वत्रिकत्वं शाब्दत्व चाभिप्रेयति संक्षेप ॥ १७ ॥

गोविन्दचरणद्वन्द्ववन्दनानन्दशालिना ।
आख्यातवादव्याख्येयं रामकृष्णेन निर्मिता ॥ १ ॥

इति रामकृष्णनिर्मिता व्याख्या समाप्ता ।

शुभमस्तु सर्वेषाम् ।

---

# " गुजराती " प्रिंटिंग प्रेस—स्थानि

## क्रय्यसंस्कृतपुस्तकानि

| | | |
|---|---|---|
| संस्कृत प्रथमादर्शः (सचित्र) ... | ०— ६—० | ०— २—० |
| संस्कृत द्वितीयादर्शः (सचित्र) ... | ०— ८—० | ०— ३—० |
| संस्कृत तृतीयादर्शः (सचित्र) ... | ०—१०—० | ०— ४—० |
| वैदिकसाहित्यचरित्रम् ... | २— ४—० | |
| श्रीकृष्णविलासकाव्यम् (विलासिन्याख्यया व्याख्यया समेतम्) ... | ०—१२—० | |
| भासकथासार (प्रथमद्वितीयौ भागौ) ... | ०— ८—० | |
| नैषधकाव्यरत्नम् (महाकविश्रीहर्षप्रणीतम् मल्लिनाथसूरीकृत व्याख्यया सहितम् सर्गाः—१—६ | १— ८—० | |
| ,, ,, सर्गाः ७—१२ | १—१२—० | |
| शब्दमञ्जरी (अव्यय समासप्रकरणः धातुमालिका सहिता पं. अनंत नारायण शास्त्रिणासंकलिता | ०— ६—० | |
| नित्याह्निकम् सस्वरम् (कापडी पुठं) ... | ०— ८—० | |
| ,, (अंग्रेजी भाषांतर कापडी पुठं)... | ०— ८—० | |
| प्रश्नमार्ग (पूर्वार्ध) (ज्योतिष) पुनश्शेरि नम्पि नीलकण्ठशर्मणा संस्कृता टिप्पण्या सहित... | ३— ०—० | |
| श्रीरामोदन्तम् गणपति शास्त्रीकृत टीप्पण सहित | ०— ४—० | |
| तर्कसार ... ... ... | ०— ६—० | ०— १—० |
| ऋग्विधानम् ... ... ... | ०— ८—० | ०— १—० |
| प्राकृत संविधानम्... ... ... | ०— ६—० | ०— १—० |
| शिवानन्द लहरी with English Trans. | ०— ६—० | ०— १—० |
| ... | ०— ६—० | ०— १—० |
| वाक्यतत्वम् ... ... ... | ०— ४—० | ०— १—० |
| कोकिल संदेशः ... ... ... | ०— १—६ | ०— ०—६ |
| श्यामला दण्डकम्—श्यामला नवरत्न मालिका. | | |

---

| | | |
|---|---|---|
| शिवनाम कल्पलतालवालः ... | १— ०—० | ०— २—० |
| पद्मपुराणम् महामुनिश्रीमद्व्यास प्रणीतं श्री मधुसूदन सरस्वती विरचीत. (चार भाग) | २४— ०—० | |
| श्रीमद् भागवत श्रीधरी टीका सहित ( प्रख्यात गणपत कृष्णाजी के छापखानामें छपी हुए.) | २०— ०—० | |